श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

श्रीवादिराजयति कृतम्

# ॥ श्री वेङ्कटेशमङ्गळाष्टकम् ॥

*This document* has been prepared by*

***Sunder Kidambi***

*with the blessings of*

श्री रङ्गरामानुज महादेशिकन्

**His Holiness *śrīmad āṇḍavan* of *śrīraṅgam***

*This was typeset using LaTeX and the **skt** font.

श्रीः

श्रीमते रामानुजाय नमः

# ॥ श्री वेङ्कटेशमङ्गळाष्टकम् ॥

श्रीक्षोण्यौ रमणीयुगं सुरमणीपुत्रोऽपि वाणीपतिः
पौत्रश्चन्द्रशिरोमणिः फणिपतिः शय्या सुराः सेवकाः।
तार्क्ष्यो यस्य रथो महच्च भवनं ब्रह्माण्डमाद्यः पुमान्
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गळम्॥ १ ॥

यत्तेजो रविकोटिकोटिकिरणान् धिक्कृत्य जेजीयते
यस्य श्रीवदनाम्बुजस्य सुषमा राकेन्दुकोटीरपि।
सौन्दर्यं च मनोभवानपि बहून् कान्तिश्च कादम्बिनीं
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गळम्॥ २ ॥

नानारत्नकिरीटकुण्डलमुखैर्भूषागणैर्भूषितः
श्रीमत्कौस्तुभरत्नभव्यहृदयः श्रीवत्ससल्लाञ्छनः।
विद्युद्वर्णसुवर्णवस्त्ररुचिरो यः शङ्खचक्रादिभिः
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गळम्॥ ३ ॥

यत्फाले मृगनाभिचारुतिलको नेत्रेऽब्जपत्रायिते
कस्तूरीघनसारकेसरमिलच्छ्रीगन्धसारो द्रवैः।
गन्धैर्लिप्ततनुः सुगन्धसुमनोमालाधरो यः प्रभुः
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गळम्॥ ४ ॥

एतद्दिव्यपदं ममास्ति भुवि तत्सम्पश्यतेत्यादरा-
द्भक्तेभ्यः स्वकरेण दर्शयति यद्दृष्ट्याऽतिसौख्यं गतः।
एतद्भक्तिमतो महानपि भवाम्भोधिर्नदीति स्पृशन्
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गळम्॥ ५ ॥

यः स्वामी सरसस्तटे विहरतो श्रीस्वामिनाम्नः सदा
सौवर्णालयमन्दिरो विधिमुखैर्बर्हिर्मुखैः सेवितः।

यः शत्रून् हनयन् निजानवति च श्रीभूवराहात्मकः
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गळम्॥ ६ ॥

यो ब्रह्मादिसुरान् मुनींश्च मनुजान् ब्रह्मोत्सवायागतान्
दृष्ट्वा हृष्टमना बभूव बहुशस्तैरर्चितः संस्तुतः।
तेभ्यो यः प्रददाद्वरान् बहुविधान् लक्ष्मीनिवासो विभुः
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गळम्॥ ७ ॥

यो देवो भुवि वर्तते कलियुगे वैकुण्ठलोकस्थितो
भक्तानां परिपालनाय सततं कारुण्यवारां निधिः।
श्रीशेषाख्यमहीध्रमस्तकमणिर्भक्तैकचिन्तामणिः
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गळम्॥ ८ ॥

शेषाद्रिप्रभुमङ्गळाष्टकमिदं तुष्टेन यस्येशितुः
प्रीत्यर्थं रचितं रमेशचरणद्वन्द्वैकनिष्ठावता।
वैवाह्यादिशुभक्रियासु पठितं यैः साधु तेषामपि
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गळम्॥ ९ ॥

॥ इति श्री वेङ्कटेशमङ्गळाष्टकं सम्पूर्णम्॥